गीर्वाण-वाणी रस मज्जनेन
देवोपमं छात्र जनं करोति
काव्ये च या प्रेमपरं तनोति
सा "देवगोष्ठी" जयताल्लसन्ती

ओ३म्

संस्कृतोत्साहिनी-परिषदः

— प्रमुखं पत्रम् —

# देवगोष्ठी

~ संचालकः ~

रामनाथो वेदालङ्कारः

संपादकः ~
सुभाष-चन्द्रः

~ सह सम्पादकः
व्रजेश कुमारः

तृतीयाङ्कः

तिथिः २३.१२.६०

देवगोष्ठी



# अनुक्रमणिका

# देवगोष्ठी

# देवगोष्ठी

सम्पादय, ये हितसन्तोषां त्वं प्रियं कुरु, ये भोजयितारो यज्वानश्च तेषां प्रियमाचर इदं मदीयं वचः पूर्णं कुरु।

यथा देवा असुरेषु श्रद्धामुग्रेषु चक्रिरे।
एवं भोजेषु यज्वस्वस्माकमुदितं कृधि॥

जगति देवपुरुषा धर्मविरोधिनां साडिडि: मध्येऽपि दिव्यसत्तां निराकुर्वतां नास्तिकानामपि मनःसु स्वकीयेन श्रद्धामयेन जीवनेन श्रद्धाबीजं वपन्ति। तथैवास्माकं समाजे ये भोजयितारो यज्वानश्च तेषामपि चेतःसु ते श्रद्धामुत्पादयेयुः। अयि श्रद्धे! अस्माकं वचः पूर्णं कुरु।

श्रद्धां देवा यजमाना वायुगोपा उपासते।
श्रद्धां हृदय्य१या कूत्या श्रद्धया विन्दते वसु॥

यम नियमादि पालन तत्पराः प्राणायामपरायणा यजमाना देवाः श्रद्धामुपासते, दृढ संकल्पेन सर्वे हार्दं श्रद्धां धारयन्ति, तया च श्रद्धया

# "कस्य नाभ्यर्चनीयः"

(श्री स्वामी श्रद्धानन्दः)

स्वसुखनिरभिलाषो ऽखिन्नलोकहेतोः
परिहृतनिजलक्ष्मीः देशलक्ष्मीं वितेने।
विगतसकलरागः प्राणिमात्रानुरागः
जगति ननु महात्मा कस्य नाभ्यर्चनीयः॥

सकलभयविमुक्तो यश्चचार क्षितिं ताम्
कथमपि न विमुक्तो ऽभूदात्मनः स्वात्मभावात्
उपशमनमुपनिन्ये शोणितैः शत्रुवर्गं
स खलु परमवीरः कस्य नाभ्यर्चनीयः॥

— धर्मदेवो
वेदवाचस्पतिः

# श्रद्धानन्दं नुमो वयम्

1. ओजस्विनं महावीरं,
वक्तारमुपकारिणम्।
श्रद्धायुक्तं सदापूज्यं,
श्रद्धानन्दं नुमो वयम् ॥१॥

2. जगद्वन्द्यं दयानन्दं,
दयानन्दानुगामिनम्।
गुरुकुल प्रणेतारं,
श्रद्धानन्दं नुमो वयम् ॥२॥

3. निरतं देश सेवायां,

सर्वदुःखापहारकम् ।
शुद्धिकार्ये प्रसक्तञ्च,
श्रद्धानन्दं नुमो वयम् ॥३

४. वेदादीनां प्रचाराय,
रक्षणाय च सर्वतः ।
इह जातं महामान्यं,
श्रद्धानन्दं नुमो वयम् ॥४

५. श्रेष्ठानां परिरक्षार्थं,
समुच्चाराय दुष्कृताम् ।
अवतीर्णमिव स्वर्गात्,
श्रद्धानन्दं नुमो वयम् ॥५

# कर्मयोगी श्रद्धानन्दः

अस्माकं गुरुकुल पुण्यभूमे जन्मदातारं स्वामिनं श्रद्धानन्दं को न विजानाति ? तेन हि पुण्यात्मना अत्रागत्य नानाविधानि कष्टानि विषह्य स्वोद्देश्यं पूरितम् । स्वामिनो दया-नन्दस्य महत्त्वं तस्य मतेः सदैव पी स्फुरति स्म । तस्य पूर्तिरेव तस्योद्देश्य मासीत् । तस्य राष्ट्रप्रेम स्मृत्वा अस्माकं मनस्स्वेका नूतनैव स्फूर्तिरुत्पद्यते । तेन राष्ट्रपित्रा स्वदेशाय अनेकानि कष्टानि सोढानि । निजां निधिवलीं सम्पत्तिं प्रियान् स्व सुतान् स्व देहञ्च इति सर्वमपि तेन तस्मिन राष्ट्रप्रेमाग्नावाहुती कृतम् । यदा

# देवगोष्ठी

पाञ्चाल देशे अमृतसरे नाम्नि नगरे रौलट्
ऐक्ट भयेन सर्वे नराः कम्पन्ते स्म, राष्ट्रीय
महासभाया अधिवेशनमप्यसम्भव मिव
प्रतीयते स्म तदा तेनैव स्वागत समित्या
अध्यक्षतां स्वीकृत्य सर्वमपि कार्यं कृतम्।
न केवल मेतावदेव, हिन्दूनां मोहम्मदीयानाञ्च
यदा परस्परं सङ्घर्षो जातः तदापि तेनैव तस्य
समाप्तिः कृता। दिल्ली नगरस्य च घटना
कस्य न परिचिता। तच्चित्र मस्माकं नेत्रयोः
पुरतोऽद्यापि वर्तते यदा तेन गुर्खासैनि-
कानां पुरत एव स्व विशालं वक्षस्थलमा-
स्फालितम्। एतानि सर्वाणि कार्याणि तेन
कस्य प्रेरणया कृतानि इति ज्ञातुं कठिनम्।
परं यदि वयं विचारयेम तर्हि ज्ञायते यत्
स्वामिनो दयानन्दस्य पं० गुरुदत्तस्य चालना
प्रेरितो भूत्वा तेन महान्ति कार्याणि कृतानि।

# देवगोष्ठी

गुरुकुलस्य स्थापनाया कारणमासीत् यत् तत् समये दूषिता शिक्षा पद्धतिः प्रचलिता ऽसीत् । तया शिक्षया ब्रह्मचर्यस्य पालनं चरित्र निर्माणस्य न कथमपि भवितुं शक्नोति स्म । तद् दृष्ट्वैव तेन गुरुकुलस्य स्थापनाया निश्चयः कृतः । तस्य कृते अनेकाः समस्याः समुत्पन्ना, परं तेन एव महता प्रयत्नेन " उपह्वरे गिरीणां सङ्गमे च नदीनां " अस्यादर्शानुसारमेव गङ्गायास्तटे हरिद्वारे गुरुकुलस्य स्थापना चक्रे । सर्वतः प्राक् च स तत्र स्वपुत्रानेव प्रेषितवान् । एवमेवेन्द्रप्रस्थादीन्यनेकानि गुरुकुलानि संस्थापितवान् । स्त्री शिक्षां प्रत्यपि स विचिन्तितवान् । तासां कृते जालन्धरनगरे कन्या महाविद्यालयस्य स्थापनां चकार । एतेषु गुरुकुलेषु च चरित्र निर्माणस्य ब्रह्म चर्य पालनस्य च शिक्षा दीयते स्म । स

# देवगोष्ठी

अनेकान् मोहम्मदीयान् स प्रयोगेण हिन्दून् कृतवान् । एवं स गुरुकुलानि संस्थाप्य पुनः लुप्तामाश्रमव्यवस्थां वर्णव्यवस्थां च उज्जीवितवान् । स आर्यसमाजस्य प्रचारकेष्वन्यतम आसीत् । तस्य नेतृत्वे आर्यसमाजस्य पूर्वे वोल्लानि जाता । आर्याणां कृते स दयानन्दस्य प्रतिमाऽऽसीत् । स आर्यसमाजस्य नियमान् सर्वेषु जनेषु प्रख्यापयामास । सप्ताष्टवर्षाणि यावत् स पञ्जाबसभायाः प्रधानपदं समलञ्चकार । अद्यापि तस्य कार्याणि दृष्ट्वा तस्य विशालमूर्तिरस्माकं पुरतो नृत्यं कुर्वती प्रतीयते । तेन हि देशोद्धारकेण स्वं सर्वमपि शुद्धीकृतम् ब्रिटिश राज्य काले महात्मना गान्धिना प्रचालितेष्वान्दोलनेषु भागं गृहीत्वा स कथितवान् यन्नाहं कांग्रेस दले अपितु धर्मयुद्धे सम्मिलितो

# देवगोष्ठी

भवति । मोहम्मदीया अपि तस्य प्रेमपात्राण्या-
सन् । दिल्ली नगरे जामा मस्जिदे मोहम्म-
दीयानां पुरत एव तेन "त्वं हि नः पिता
वसो त्वं माता शतक्रतो बभूविथ" इति पवित्र
वेद मन्त्रोच्चारणं कृत्वा स्वं भाषणं कृतम् ।
परं को विजानाति स्म यदेकस्मिन् दिने
अस्य संन्यासिनो वक्षस्थलमेकेन धर्मान्ध
मोहम्मदीयेन विद्धं भविष्यति । श्रीमतः स्वा-
मिनो जीवने वयं पश्यामो यत् "आचारः
परमो धर्मः" इदमेव तस्य महल्लक्ष्य
मासीत् । तस्य विश्वास आसीत् यद् आचा-
रस्य शिक्षा अस्माद्देशादेव कदाचिद् देश-
देशान्तरेषु प्रसृताऽभूत्"

{ एतद्देश प्रसूतस्य सकाशादग्र जन्मनः
{ स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवाः

# देवगोष्ठी

तस्यायं सुदृढो निश्चय आसीत् यत् संसारे वैदिक धर्मेणैव शान्ति भवितुं शक्नोति। अतः "कृण्वन्तो विश्वमार्यम्" इदं लक्ष्यं तस्य सम्मुखे सदैव विराजतेस्म

वेदप्रकाशः चतुर्वेदी,



# श्रद्धानन्द-श्रद्धाञ्जलिः

अहो प्राच्या शिक्षा समुचित पदं नैव वृणुते
परेषां भाषाणां विभव भव भीतिं च तनुते ।
विलासः कोप्यस्या विलसतु सुखं लासयतु नः
विचिन्त्यैवं येषां गुरुकुल विधिं धावयति मनः ॥१॥

कृतानां पुण्यानां बहु जनवौ जन्मनि पुरा ।
सुदीर्घात् सौभाग्यान्नयन पथ गामी समभवत्
जनानां यः श्रद्धामथ मनसि वृद्धामधिगतः ।
ततः श्रद्धानन्दं कथमिह न तं पुण्यव्रतिनम् ॥२॥

परेशो विश्वासी धृत सुकृत राशिः सहृदयः ।
सदा दीनोद्धर्ता कलि कलुष हर्ता मुनिवरः ॥
पिता श्री संन्यासी पटु-वटु विकासी गुरुवरः

# देवगोष्ठी

यति श्रद्धानन्दो महित गुण वृन्दो विजयते ॥३॥

पराधीना भूमिर्यति मुनि जनानां कथमहो,
इतं स्वाधीना स्यादिति मनसि धृत्वा दृढतरम्
प्रियान् पुण्यान् प्राणानपि झटिति दातुं कृतमतिः
सदः श्रद्धानन्दो जयतु सुकृतामप्रतिः सदा ॥४॥

कथं कारं श्रद्धा पवन जव भूमि भवतु नो,
महोच्चैः सिद्धान्तं व्रजतु भुवि लोकोऽप विमल
इतीवान्तर्धृत्वा सकल सुख राशिं समजहात्
धृतः श्रद्धानन्दो निखिल जन चित्ते विजयताम् ॥५॥

अमन्दानन्दं नो नयतु महिमानं कितमिदम्
गुणानामागारः सकल सुख सारः स्मृतिपथम्
सदा गच्छंस्त्रलोकान् दलित गुरु शोकान् - सुखापनात्,
कृतार्थैः पापाद् उरुतुल मपापाच्चिरा -
सदः ॥६॥

# महान् राजर्षिः स्वामी श्रद्धानन्दः

आसीत् १९१९ ख्रीष्टाब्दाः समयः। तदानीं सर्वत्र 'रौलेट एक्ट' इत्याख्यस्य विरोधे आन्दोलनं क्रियते स्म। दिल्लीनगर्यामपि, स्वामिश्रद्धानन्देन, मार्च मासस्य त्रिंशत्तिथौ आन्दोलनं विधीयते स्म। तत्र आंग्लसैनिकाः एतेषां एतादृशं जनसमूहमन्वीक्ष्य शस्त्रैः सज्जिताः आसन् तान् निरोद्धुम्। परं श्रद्धानन्दस्य नेतृत्वे, जनसमूहैः 'जयतु भारतमाता' इति घोषाऽग्रे एव श्रूयन्ते स्म। जनसमुदायस्य एतादृशं धैर्यं प्रेक्ष्य गौर-क्रूरैस्तैः, निजभुशुण्डिकाया वक्षं लक्ष्यं निर्मीयन्ते स्म। अत्रान्तरे एव विशालकायधरे

ण तेजस्विना स्वामिना श्रद्धानन्देन निज वक्षः कपाटं तेषां भुशुण्डिकानां समक्षं नग्नीचकार। अवादीच्च स पुरोपस्थितानां मनुष्याणां मारणात्पूर्वं मामेव मृत्युशैय्यां प्रापयत। स्वामिनः एतत् धैर्यं दृष्ट्वा गौराङ्ग सैनिकानां प्रतिरोध भावना ~~श~~ शान्ता जाता। इयमासीत् श्रद्धानन्दस्य निर्भयता। इयमासीत्तस्य त्यागस्य तपस्यायाश्च प्रत्यक्षोदाहरणम्।

कथ्यते यत्, स्वामी श्रद्धानन्दो दृढ संकल्पी आसीत्। मनसि समागतां वार्तां स पूर्णामेव विदधाति स्म। एकस्मिन्समये तस्य मनसि गुरुकुल स्थापनायाः भावना समुत्पन्ना। नासीदिदं सहज कार्यं गुरुकुल स्थापनस्य तदानीम्। तस्य एतादृशेन संकल्पेन, स सर्वेषां जनानां प्रहास पात्रमजायत। परं स इमां

# देवगोष्ठी

प्रतिज्ञां विधाय यत् यावत्कालमहं, त्रिंशत्सहस्राणि रूप्यकाणि एकत्र न करिष्यामि, न तावत्कालं स्वगृहं प्रवेक्ष्यामीति। पुनश्च स्वगृहात् बहिर्निर्गतवान् रूप्यकाण्येकत्र कर्तुम्। अन्ते च तेन स्वकीया प्रतिज्ञा परिपूरिता।

एवमेव च एका घटना, "सद्धर्मप्रचारक" इति पत्रिकायाः वार्ता, या उर्दूभाषायां प्रकाश्यते स्म। तस्य मनसि समागतं यत् यदियं पत्रिका हिन्दीभाषायां प्रकाशिता स्यात्। अतस्तेन रात्रावेव सर्वं प्रबन्धं विधाय, प्रातःकालादेव आर्यगिरायां पत्रिकायाः प्रकाशनमारब्धम्। अनेन प्रतीयते यत् स मनस्यागतं संकल्पमवश्यमेव पूर्णं करोति।

# देवगोष्ठी

स्वामि श्रद्धानन्देन न केवलं शिक्षा क्षेत्रे एव, परं शुद्ध्यान्दोलनेऽपि प्रभूतं कार्यं विहितम्। ये राजपुत्राः मुगला बहुकुस्ते पुनः हिन्दुत्वं प्रापिताः। एवमेव राष्ट्रिय क्षेत्रेष्वपि स प्रशंसनीयं कार्यं चकार। तदानीममृतसरे "जलियानवाला" इत्यभिधेयायां प्रसिद्धायां वाटिकायां घटनापि घटिता आसीत्। अतो जनाः पुनः कांग्रेसस्याधिवेशनकरणाद् बिभ्यति स्म। परं स्वामिना श्रद्धानन्देन ग्रामे २ परिभ्रम्य, नगरे २ च कांग्रेसस्य प्रचारं चक्रे। कांग्रेसाधिवेशनं च पूर्णरूपेण साफल्यमकारोत्। एतदखिलमन्वीक्ष्य ज्ञायते यत् कीदृशः स अस्पृश्योद्धारकः, निर्भीकः, कार्य-

# देवगोष्ठी

कुशलश्चारवीर् ।

स्वामिनि श्रद्धानन्दे एतादृशा गुणाः कथं समायाताः इति सम्बन्धिन्येऽपि एका विस्मयदायिका घटना संविद्यते। यस्मिन्समये स्वामिश्रद्धानन्दः ईसाईधर्मेण प्रभावितः आसीत्, तदानीं तस्मिन् काले बरेलीमध्ये स्वामीदयानन्दः समागतः आसीत् आर्यसमाजस्य प्रचाराय। तस्य भाषणं श्रोतुं स्वामिश्रद्धानन्दोऽपि स्वपितुः नानकमहोदयस्य प्रेरणया, उद्यतवान्। तत्र प्रथमं तावत्, स दर्शनमात्रेणैव प्रभावितो बभूव। अन्ते च भाषणमाकर्ण्य तु स पूर्णरूपेणैव तस्य भक्तो जातः। तदाप्रभृत्येव स एतादृशो महापुरुषोऽभवत्। इदमेव तस्य महापुरुषस्य निर्माणरहस्यमासीत्।

# देवगोष्ठी

आचार्यस्य दयानन्दस्यैवायं प्रभावः यत् श्रद्धानन्देन स्वशरीरमप्यविगणय्य वाचा, मनसा, शरीरेण, शरीरस्य च एकैकेन कणेन देशस्य, गुरुकुलस्य, आर्यसमाजस्य च सेवा-कृता तेभ्यः एव च एकस्य दुष्टहतकस्य हस्ताभ्यां गोलिकाः स्व वक्षसि सोढ्वाहुतिर्दत्ता । अद्य नास्ति श्रद्धानन्दः परं तस्य साहसं कर्मठता, निर्भयता चास्मभ्यं प्रेरणां प्रदातुमिदानीमप्यवशिष्टा वर्तते सदैव च भविष्यति ॥

[redacted]

# श्रद्धानन्द-स्तुतिः

शुद्धाचाराः, सरलहृदयाः, कृत्यमेवाचरन्तः,
देवेन्द्रं तं भुवनपितरं, श्रद्धयाऽर्चयन्तः।
कुर्वाणाः स्वं, विमलचरितं, सर्वदा यज्ञरूपं,
श्रद्धानन्दा गुरुजनवराः, कस्य नाभ्यर्चनीयाः? १॥

निर्भीका ये, विमलमतयः, सत्यमेवादिशन्तः,
सत्संकल्पा दलितपतितान् सर्वदैवोद्धरन्तः।
मार्गभ्रष्टानपि सुतपसा, सत्यमार्गे नयन्तः,
श्रद्धानन्दा गुरुजनवराः कस्य नाभ्यर्चनीयाः? २

सच्छिक्षार्थं गुरुकुलमिहादर्शभूतं विधाय,
प्राणस्यैवाहुतिमनुपमां धर्मवेदौ निधाय।
लोके दिव्याममरपदवीं धर्मवीरा ययुर्ये,
श्रद्धानन्दा गुरुजनवराः कस्य नाभ्यर्चनीयाः? ३

वीराः केसरिणः स्थिता अनुपमाः,
सैन्यस्य ये सम्मुखं

# देवगोष्ठी

तिष्ठामीह हतात्र मां नहि भयं,
प्रोचुश्च ये निर्भयाः ।
अन्यान्यं न विषेहिरे परकृतं,
कष्टं मुदा सेहिरे,
श्रद्धानन्द महोदया गुरुवरा
वन्द्या न कस्यावनौ ? ४

श्रद्धाया बलमेव दिव्यमतुलं चानन्दमत्यद्भुतं,
सम्प्राप्येह बभूवुरुग्रतपसा लोकोपकारे रताः ।
लोकोद्धारसमीप्सुभिः सुमतिभिर्यैः सर्वमेधः कृतः
श्रद्धानन्द महोदया गुरुवरा वन्द्या न कस्यावनौ ?
येषां संस्मरणं सदा नवबलं, स्फूर्तिं च धत्ते नवां,
येषां निर्मलजीवितं समभवत् सर्वानुकृत्यं शुभम् ।
जुम्मा मस्जिदमध्यमप्यधिगता ये वेदमन्त्रं जगुः,
श्रद्धानन्द महोदया गुरुवरा वन्द्या न कस्यावनौ ?
सर्वे देवसुताः समानमनसः, प्रत्यावलोक्या हि ते,
नोच्चः कश्चन नाधमोऽस्ति जनुषा, नीचोच्चता कर्मभिः
शुद्धं बोधमिमं सदैव ददतः, सर्वोन्नतेः साधनं,
श्रद्धानन्द महोदया, गुरुवराः, वन्द्या न कस्यावनौ ॥
॥७॥

# समाज-सुधारकः श्रद्धानन्दः

भारतवर्षं महापुरुषानुत्पादयितुं प्राचीन कालादेव विख्यातमास्ति। यदा यदा धर्मस्य ग्लानि विनाशस्य चिह्नानि चाजायन्ते, भारते कस्यचित् तु महापुरुषस्य जन्म भवत्येव यो हि राष्ट्रं धर्मञ्च विनाशात् रक्षत्येव। भगवतो रामचन्द्रस्य, कृष्णस्य, महात्मनो बुद्धस्येव लोकोत्तरमहापुरुषाणां भारतवर्षेण जन्म दत्त्वा देशस्य, जातेर्धर्मस्य च महती रक्षा कृता। स्वामि-श्रद्धानन्दोऽप्यस्या एव कोट्याः महापुरुष आसीत्। तस्य जन्मनः पूर्वं राष्ट्रस्य स्थितिर्महती शोचनीया विषमा चासीत्। तस्मिन् काले राष्ट्रमराजकतां प्रत्यगुत्तरं भवति स्म। राष्ट्रियशक्तिरपि खण्डिता भवति स्म। धार्मिकी, सामाजिकी अवस्था तु द्रष्टुमपि नाशक्यत।

# देवगोष्ठी

धर्मं कर्म च जना विस्मृतवन्त आसन्। कुरीतीनां प्रभावोऽवर्धत। शिक्षायाः पूर्णाभाव आसीत्। जातीयतायाः पूर्णाधिकार आसीत्। प्राचीनवैदिकसंस्कृतिः प्रायः सर्वेषां जनानामपरिचितेवासीत्। हिन्दूधर्मं विहाय जना शीघ्रं यवनधर्मं ईसाईधर्मं चागृह्णन्। एतादृशे संकटसमये स्वामिश्रद्धानन्दस्य जन्माभूत्।

तस्य जन्म जालन्धरान्तर्गते स्थिते तलवननाम्नि ग्रामे १८१३ तमे विक्रमीय वर्षेऽभूत्। तस्य पितुर्नाम नानकचन्द इत्यासीत्। भवतो शैशवकालस्य नाम च मुन्शीराम इत्यासीत्। तदीया सकला शिक्षा वाराणस्यां जाता। अथ यौवनकाले जाते क्रमेण तस्य विवाहोऽपि जालन्धर एवाभूत्। तस्य भार्याया नाम शिवदेव्यासीत्।

यौवनं तु आसीदेव, कोटपालस्य बालकश्चासीत् अस्मात् कारणात् तस्मै धनस्याल्पता नासीत्। अतिधनत्वात् कुसङ्गतेश्च शनैः शनैः तस्य प्रवृत्तिरपवित्रा जाता सकलान् गुणान् च स अगृह्णात्। एकदा यदा स 'बरेली' नगरे आसीत् तत्र तस्य परिचयः स्वामि दयानन्देनाजायत। तदनन्तरमकस्मादेव तद्दिनादारभ्य तस्य सकला दुर्गुणा दूरीभूताः। तदारभ्य स भारतीयसंस्कृति स्थापनार्थं गुरुकुल स्थापनायै प्रायतत।

अन्ते १९०२ तमे वर्षे तेन पञ्चनदीयार्य-प्रतिनिधि सभायाः आधीनत्वे हरिद्वारात् पञ्चक्रोशाद् गङ्गायाः पूर्वीयतटे "गुरुकुल काँगड़ी" इति नाम्न्याः संस्थायाः स्थापनमकारि, यस्यां भारतीयसंस्कृतेः

# देवगोष्ठी

अनुरूपं चरित्रनिर्माणेन सार्धं राष्ट्रभाषाया: माध्यमात् प्राच्यां पाश्चात्याञ्च शिक्षां प्रदातुं व्यवस्थामकार्षीत्। जातिभेदस्य, वर्णभेदस्य, अस्पृश्यतायाश्च विचारमकुर्वतश्चरित्रसम्पन्नानुपमिनो विदुषो राष्ट्रभक्तान् युवकान् निर्मातुं विचार आसीत्। इदमेवोद्देश्यं गुरुकुलस्थापनस्यासीत्। निजाशिक्षा निजमातृभाषाया माध्यमादेव दीयेत, अयं प्रथमो मन्त्र आसीत् यं गुरुकुलस्य कर्णधारो न्यालयत्। इतिहास अर्थशास्त्र दर्शन विज्ञानादीनां सकलविषयाणां शिक्षां हिन्दीभाषयैवाददात्।

भारतीयनार्या अधोगतिमवलोक्य तस्य हृदयं अतिदुःखितमभवत्। समाजस्य खलु अर्धशक्ति: नार्यामेवास्ति इदं विचार्यैव तु स्वामिना चिन्तितम् यत् राष्ट्रियजागरणाय स्त्रीशिक्षा अनिवार्या। एतदर्थं स न केवलं

# देवगोष्ठी

निजे साप्ताहिके 'सद्धर्म प्रचारक' नाम्नि पत्रे लेखानलिखन् परं तेभ्यो विचारेभ्यः क्रियात्मक-रूपं प्रदातुं लाला देवराज महोदयस्य सहयोगेन 'कोट किशनचन्दे' आर्य कन्या श्रम स्य स्थापनाऽपि तेन कृता। तत्सार्धं अनाथाभ्यो विधवाभ्यश्च वनिताश्रमस्यापि स्थापनाकारि। यस्य च परिणामस्वरूपे पञ्चनदे कन्यापाठशालानां समूहमिवाभवत्। यदि स स्त्रीशिक्षाया उद्धारं नाकरिष्यत् तदा देशस्येयं जागरितावस्थासम्भवाऽऽसीत्।

राष्ट्रियजागरणाय स्वामिनो द्वितीयं कर्म दलितोद्धार इति आसीत्। निज जातेः अछूतान् दीनदलितान् पुरुषान् पीडितान् सर्वथा वञ्चितांश्चावलोक्य तस्य मृदुमनोऽरुदतिव। देशस्य प्रतिकोणं भ्रमित्वा भाषणैः लेखैश्च जनानजागरयत् दलितानां स्थितिञ्च समुन्नयत्।

# - देवगोष्ठी

अस्पृश्यताया निवारणाय तेन निज सकला शक्तिर्दे-
त्ता। दक्षिणभारते नवजागर्ते उल्मुकं गृहीत्वा
जनानबूबुधत्। अस्पृश्यान् राष्ट्रस्याङ्गानि चि-
न्तयन् तान् शिक्षितुमपि प्रायतत। यद्यपि
तस्मिन् काले राष्ट्रस्य कर्णधारास्तस्योपरि
उपहासमकुर्वन् परं केषुचिद्दिनेषु पश्चात् तु
सकलराष्ट्रमस्य महत्त्वमजानात्।

ईसाई यवनान् भूयो हिन्दून् निर्मातुं
तेन स्वशुद्धिकार्यमारब्धम्। ये जना अधुना
पर्यन्तं स्वामिनः शुद्धिकार्यं साम्प्रदायिकं तथा
राष्ट्रविरोधि अचिन्तयन् भारते स्वाधीने सति
ते स्वामिनो दूरदर्शितायाः राष्ट्रभक्तेश्च प्रशंसका
अभवन्। अवगुण्ठन-प्रथा, बालविवाहेत्यादि
धार्मिक सामाजिक कुरीतीः राष्ट्राय विघ्नं
ज्ञात्वा ता ध्वंसितुं प्रायतत। सन् १९१९ तमे
वर्षे महात्मा गान्धिना परिचालिते राष्ट्रियान्दो-

# देवगोष्ठी

हिन्दून संघटयितुं हिन्दूसंस्कृतेः धर्मदिशनाञ्च प्रसाराय स नानाप्रशंसनीयं सेवा अकार्षीत् , तां वयं चिरकालं स्मरामः। अन्ते तस्यातितरसाधारणगुणालंकृतं स्वकुलपितरं श्री स्वामि श्रद्धानन्दमहं पुनः पुनः प्रणमामि।

[illegible]

लेखकः -

वीरेन्द्रपालो नेगी

गोपादशीयः

# देवगोष्ठी

लनेऽपि स वीरता साहसपूर्णमहादेशभक्तेः कार्याणां परिचयमददात्। शुद्ध्यान्दोलनेन यवना अति क्रुद्धा अभवन्. तत्परिणामस्वरूपे ते एकं पवित्रमानवं 'काफिर' इति विचार्य, एकदा यः तेषामेव मस्जिदे हिन्दूमुस्लिमैकतायाः सम्बन्धे उपदेशमददात् तमेव विनाशयितुं तत्परा अभवन्। धर्मान्धता निजचरमसीमायामासीत्। अत्र अब्दुलरशीदरूपे सा दानवमूर्तिः प्रकटिता। दिसम्बरमासस्य त्रयोविंश तारिकायां सन् १९२६ तमे च वर्षे अब्दुलरशीदस्य गुलिका-प्रहारेण तस्य मृत्युः जाता। तस्मिन् मृते या हानिरस्माकं जाता सा वर्णयितुमशक्या वर्तते। स शुद्धः स्वद्रवितापूर्णप्रयत्नेन चिरकालाय तममरत्वमकरोत्।

# स्वामी  श्रद्धानन्दः

लेखकः : विजय कुमार एकादशी म,

"यदा यदा हि धर्मस्य ग्लानिर्भवति भारत ।

अभ्युत्थानम धर्मस्य तदात्मानं सृजाम्यहम् ॥"

इति गीताया वचनानुसारं यदा जगति धर्म-नाशः, अधर्मस्य राज्यम्, सभ्यतायाः संस्कृतेश्च लोपो भवति तदैव महापुरुषा अवतरन्ति लोके । स्वोपदेशैश्च जनान् तारयन्ति दुःख सागरात् ।

# देवगोष्ठी

इयमेव दशासीत् पूज्यस्य स्वामिनः श्रद्धानन्दस्य जन्मकाले। यदा सज्जना दुर्जनैः सन्ताप्यन्ते स्म, अधर्मस्य साम्राज्यं स्थापितमभूत् जातिभेदो बाल विवाह प्रथा, अस्पृश्यत्वञ्चोग्ररूपेऽविद्यत, "स्त्री शूद्रौ नाधीयाताम्" इति ब्राह्मणै-रुद्घोष्यते स्म, भारतवर्षस्य तस्यां दुर्दशायां भारतीय संस्कृतेः प्राणस्य स्वामिनः श्रद्धानन्दस्य पञ्चनद प्रदेशस्य तलवन ग्रामे जन्मोऽभूत्।

तस्मिन् समयेऽस्माकं देशे आंग्लानां प्रभुत्वमासीत्, अतः सर्वत्रांगल भाषाया आंग्ल सभ्यतायाश्च प्रसारः प्रचारश्च क्रियते

# देवगोष्ठी

एवम् शनैः शनैः भारतीयाः पाश्चात्यानां वेशभूषां सभ्यतां चाङ्गीचक्रुः। इमां हृदयदीपिनीमवस्थां विलोक्य सुधाराय गृहीतजन्मनः श्रद्धानन्दस्य चित्तं दुःखितं बभूव। एतदेव कारणमस्ति यत् भारतीय संस्कृतेः सभ्यतायाश्च, आर्यभाषायाः देववाण्याश्च वेदादिसच्छास्त्राणाञ्च भूयः प्रचाराय हरिद्वार नगरस्थानात् दूरे पारे गङ्गं कांगड़ी ग्रामे मन्दाकिन्यास्तीरे गुरुकुलं संस्थापयत्। यस्य विषये ब्रिटिश साम्राज्यस्य भूतपूर्व प्रधानमन्त्री रैमजे मेकडानल्ड महोदय एकस्यां पत्रिकायां

# देवगोष्ठी

स्व लेखे ऽलिखत् यत् –

"हरिद्वारस्य गुरुकुलं संसारस्य शिक्षाक्षेत्रेषु सर्वाधिकमाश्चर्यमयं परीक्षणं वर्तते।"

साम्प्रतमपि भारतीय संस्कृतेः संजीवनी या उत्तमा शिक्षा प्रणाली गुरुकुलेषु विद्यते तादृश्यन्यत्र कुत्रापि नास्ति।

अभ्यर्चनीयः श्रद्धानन्द एको महान् वक्ता आसीत् परं सुधार कार्यं स केवलं भाषणैरुपदेशैर्वाकार्षीदिति नास्ति, अपितु क्रियात्मक रूपेऽपि सुधारमकरोत्. एतस्मादेव कारणात् महात्मना गान्धी महोदयेनैकदा निज भाषणे ऽभाषत

# देवगोष्ठी

यत् - "श्रद्धानन्दो न केवलं वाक्शूर एव परं कर्मशूरोऽप्यासीत् ।"

जाति-भेद प्रथाया एव फलमस्पृश्यत्वमभूत् तस्य समूल नाशाय यावन्मात्रं कार्यं वेदविदांवरेण श्रद्धानन्देन विहितं तावन्मात्रं महर्षिं दयानन्दं विहाय नान्येन केनापि कृतम् । सकल जातीयेभ्यो बालेभ्यो वेदस्मृत्यादिशास्त्राणां सुशिक्षां दत्वा, अस्पृश्यताया उच्छेदायाचार्यवर्येण कृतं प्रशस्यं प्रयत्नं न कोऽपि सहृदयः पुमान् विस्मर्तुं प्रभवति ।

स्वामिनः श्रद्धानन्दस्य जीवन काले

# देवगोष्ठी

बहवो हिन्दवः ख्रीस्तमतमवलम्बन्ते स्म बहवश्च मुस्लिम धर्मं स्वीकृतवन्तः । हिन्दूनामीदृशीं दशामहितकरं धर्मपरिवर्तनं विलोक्य स आर्य समाजस्य नेतृत्वं विधाय वेदस्य पुस्तकञ्च हस्ते गृहीत्वाऽनेकशः शुद्धिकार्यं कृत्वा हिन्दूनरक्षद् दुःखात् ।

स्वामि श्रद्धानन्दो निर्भयतायाः करुणायाश्च मूर्तिरासीत् । गढवालस्य दुर्भिक्ष पीडितानां पुरुषाणां सहायतार्थं स्वप्रियैः शिष्यैः सह दिवानिशं बहूनि दुःखानि तेन सोढानि । निर्भयताया मूर्तेस्तस्य दिल्लीनगरस्य "चान्दनी चौक"

# देवगोष्ठी

इति प्रसिद्धाया विषण्णा घटना न तावत् केनापि विस्मर्तुं शक्यते यावत्तत् नगरमस्ति यत्र स सुप्रसन्न हृदयेन मृत्युना सहालिङ्गनं कर्तुमैच्छत् ।

राजनीति क्षेत्रेऽपि श्रद्धानन्देन महात्मना गान्धी महोदयेन सह महत्कर्म विहितम् । बहुवारं कारागार यातना अपि तेन भोगिता ।

गुरुवर्यस्य स्वामि श्रद्धानन्दस्य महत्तानेनैव प्रतीयते यत् हिन्दूनां विरोधिभिर्मुस्लिम धर्म प्रचारकै दिल्ली नगरे "जामा मस्जिद" इति प्रसिद्ध पूजालये तस्मै उपदेशायावसरो प्रदत्तः । तत्र तेनापि हिन्दूनां मुसलमानाञ्च एकतायै सुन्दरं भाषणं कृतम् ।

# देवगोष्ठी

किमधिकं लिखेम तस्य महत्ताया विषये यावदेतत् गुरुकुलम् यावदयमार्य समाजः यावच्च भारतीयेषु मानव हृदयं वर्तते तावत् देशाय सर्वस्व त्याग कर्ता भारतस्य प्राचीन संस्कृतेः प्राणः शिक्षा क्षेत्रे प्रथमः क्रान्तिकारी स्वामि श्रद्धानन्दः सर्वैः स्मरिष्यते।

अन्ते च वन्दनीयमाचार्यं स्वामिनं श्रद्धानन्दं प्रणमन् सच्चिदानन्दं परमात्मानं प्रार्थये यदस्मभ्यमीदृशीं शक्तिं दद्यात् यत् वयं तस्य सद्गुणानाचरन्तः देश सेवायां निरता भवेम।

विजयकुमारः

# श्रद्धानन्दस्य — दिव्य-सन्देशः

गुरुकुलकांगडीविश्वविद्यालयस्य संस्थापकानां निर्भयतामूर्तीनां समाजोद्धारकशिरोमणीनामाचार्यवर्याणाममरधर्मवीराणां परमश्रद्धेयानां स्वामिश्रद्धानन्दमहोदयानां पञ्चत्रिंशो बलिदानदिवसो दिसम्बरमासस्य त्रयोविंशतिथावापतति (९ पौषमासः) यः समस्तैरप्यार्यैः सश्रद्धमाचरणीयः। 'अमरधर्मवीरस्मरणम्' इति शीर्षकान्वितान् श्रद्धाञ्जलिरूपेण निर्मितान् कतिपयान् श्लोकानस्मिन्नेवाङ्केऽवलोकयिष्यन्ति पाठकमहाभागाः। तेषाममरधर्मवीराणां स्फूर्तिदायकं दिव्यसन्देशं मां प्रति २१-५-१९२४ दिनांके प्रेषितात् पत्रात् संस्कृतभाषानुवादरूपेण पाठकानां पुरत उपन्यस्तुमीहे।

# देवगोष्ठी

सर्वेऽप्यार्या दिव्यसन्देशमिमं सर्वदा मनसि निधाय कार्यरूपे परिणमयेयुश्चेन्मङ्गल् तेषां कल्याणं स्यादार्यसमाजस्य चाद्भुता सर्वतोमुखी प्रगतिरिति विषये न संशीतिलेशोऽपि सम्भवति। अयमासीत् स सन्देशः श्रद्धेयाचार्यचरणैरार्यजनमार्गप्रदर्शनार्थं प्रेषितो देहली नगरात् ' न जातु युष्माभिः कदापि विस्मर्तव्यं यद् वैदिकधर्मः कोऽपि सम्प्रदायो न वर्त्तते। अयमस्ति स सत्यसनातनधर्मो येन विना विश्वस्य सामाजिकी व्यवस्था पलमात्रमप्यवस्थातुं न शक्ता। असंख्याध्यात्मिककोषाद्घाटनकर्त्री कुञ्जिका युष्मद्धस्तेष्वासीत्प्रदत्ता। साम्प्रतमप्यशान्ताय जगते शान्तिप्रदानं नाम युष्माकमेव कर्त्तव्यम्। किन्तु पूर्वं युष्माभिः स्वकीया सर्वाप्यपवित्रताऽपनेया भविष्यति। सगाम्भीर्यं प्रतिज्ञेयं क्रियतामद्य यद् (१) दैनिकपञ्चमहायज्ञानुष्ठाने यूयं कदापि प्रमादं न करिष्यथ। (२) अस्वाभाविकजातिभेदशृङ्खलां विदार्य वर्णाश्रमव्यवस्थां स्वकीयजीवितेषु

परिणतां करिष्यथ । (३) अस्पृश्यता कलङ्कं स्वकीय मातृभूमेः समूलं विनाशयिष्यथ तथा (४) आर्यसमाजस्य सार्वभौममन्दिरं मत सम्प्रदाय जाति वर्णादि भेदं विना सर्वमानवेभ्योऽपावृतद्वारं करिष्यथ । परमपुरुषो भगवान् अस्या गम्भीरप्रतिज्ञायाः पालने युष्माकं सहायको भवतु।

देहली
२१-५-१९२४

युष्माकं धर्मबन्धुः
श्रद्धानन्दसंन्यासी

वस्तुतः स्वर्णाक्षरेष्वङ्कनीयोऽयं दिव्यसन्देशः। वैदिक धर्मस्यार्यसमाजस्य चोदात्तं सार्वभौमरूपं सन्देशोऽयं स्फुटमभिव्यनक्ति, आर्याणां च कर्तव्यं स्पष्टं द्योतयति। खेदास्पदमिदं यच्छ्रद्धेयस्वामिश्रद्धानन्दमहोदयानां भक्तसंख्या यद्यपि भूयसी वर्त्तते तथापि तेषां दिव्यसन्देशमिमं प्रति दत्तावधानाः कार्यरूपे च परिणमयितार आर्येष्वपि न बहवो वर्त्तन्ते। स्वामिनः श्रद्धानन्दमहोदयाः श्रद्धां मातरमिवामन्यन्त। 'श्रद्धां प्रातर्हवामहे श्रद्धां मध्यन्दिनं परि। श्रद्धां सूर्यस्य निम्रुचि श्रद्धे श्रद्धापयेह नः'॥

# देवगोष्ठी

इति वैदिकभावनां सन्धर्म श्रद्धामूर्तयो भूत्वा ते निर्भयतया दभुतं दलितोद्धार शुद्धिसंघटनादिकार्यजातम-कार्षुरादर्श विद्यापीठरूपेण च गुरुकुलं संचलयामासु:। श्रद्धानैपुण्यवशादद्य तार्याणां सन्तोषजनिका प्रगतिर्देरीदृश्यते तथापि तादृशां धर्मवीराणां पुण्यस्मरणमार्येषु नूतनां स्फूर्तिं शक्तिं च प्रदास्यति यदि ते तदीयं दिव्यसन्देशमिममाकर्ण्य क्रियात्मकरूपेण तदनुसारमाचरेयु:।

—×—

## आर्य कुमारान् प्रति श्रद्धेय स्वामिनां

## सन्देश:

१९६० वैक्रमाब्दे आश्विनमासस्य द्वाविंश-दिनाङ्के महात्मानो मुंशीराममहोदया: भारतवर्षीयार्य कुमार परिषदोऽध्यक्षतामावहन्। तत्र तैरधोलिखित: सन्देश: आर्यकुमाराणां कृते प्रदत्त: य: स्वर्णाक्षरेषु अंकनीयो विद्यते।

साम्प्रतमपि स तावानेव महत्त्वपूर्णो यावान् स तदासीत्।

" सेवकाः भवितुं प्रयतध्वं यतो हि आर्यजातिः नायकापेक्षया सेवकानेवाधिकान् अपेक्षते। यदा यूयं किंकर्त्तव्यविमूढा भवेत तदा श्रीरामसेवकं हनूमन्तं स्मरत। भोः प्रियनवयुवकाः अहं पृच्छामि किं युष्मासु कश्चनापि महर्षिदयानन्दरूपस्य रामस्य सेवको हनूमान् भवितुं न यतिष्यते? महावीराञ्जनेयेन विना श्री महर्षि दयानन्दस्य कार्यमपूर्णमेव वर्त्तते। अहं इदं विश्वसिमि यत् दयानन्दमहर्षिकार्यं पूरयितुं पातक-लङ्काञ्च विध्वंसयितुं युष्मास्वेव केचन महावीराः प्रादुर्भविष्यन्तीति।"

कियान् स्फूर्तिदायको मार्गप्रदर्शकश्चायं सन्देशः? अद्यत्वे बहवो युवानोऽपि विनैवायासं नेतृत्वं कामयन्ते यथा हि सेवा भावना तु शिक्षितेषु युवकेषु प्रायो

# देवगोष्ठी

न दृश्यते नितान्तं शोचनीयेयं दशा यां दूरीकर्तुं श्रद्धेयानामाचार्यचरणानां धर्मवीर स्वामिश्रद्धानन्द महाभागानामनुयायिभिः गुरुकुलीय ब्रह्मचारिभिरियं तेषामार्यकुमारमार्गप्रदर्शनार्थं प्रदत्तः संदेशो विशिष्टतया अवधेयोऽनुसरतव्यश्च। आर्यजातेः राष्ट्रस्य च सेवाभावनां मनःस्सु निधाय यदि ते कार्यं कुर्युस्तर्हि सर्वेषां कल्याणं भविष्यतीत्यत्र नास्ति मनागपि संशयो।

# महात्मा - श्रद्धानन्दः

तपस्वी श्रद्धालुः सरलहृदयः सत्यवचनो

विशुद्धात्मा त्यागी सकलजनसेवासुनिरतः।

सुशिक्षादर्शं यो गुरुकुलमिहास्थाप्य निदधे,

यतिः श्रद्धानन्दो जयति स महात्मा शुभमतिः॥

यदा कदापि वयं भारतस्य महापुरुषान् स्मरामस्तदास्माकं समक्षं महात्मनः श्रद्धानन्दस्य शाल-प्रांशुस्तेजस्विनीमूर्तिः समागच्छति। अस्य जन्म शासने उच्चाधिकारिणः पितुर्नानकचन्द्रस्य गृहे पञ्चनदप्रदेश-स्थिते तलवननाम्नि ग्रामेऽभूत्। पिता एनं मुंशीरामेति नाम्ना आह्वयति स्म। सुखेनास्य बाल्यकालो व्यतीतः।

# देवगोष्ठी

सदैव पितुस्समीपे निवासात् प्राप्तानुभवः प्रखर-बुद्धिश्चासौ मुंशीरामः निजसहोदरेषु लघुतमोऽप्युच्चतम आसीत्। पिता एनं विद्वन्नगर्यां वाराणस्यां क्वीन्स-महाविद्यालयेऽशिक्षयत्। तदा ग्रीफिथमहोदयोऽस्य महा-विद्यालयस्याचार्य आसीत्। तत्र पाश्चात्यशिक्षाप्रभावेण, धनाधिक्येन कुमित्राणाञ्च संसर्गेण मुंशीरामे दोषा उत्पन्नाः। यौवनं त्वासीदेव। किं पुनः। असौ मांस-मदिरादिसेवनमितस्ततश्च भ्रमणादिकं व्यभिचारं प्रारब्ध-वान्। तस्मिन्नेव काले अस्य स्नेहमयी माता दिवंगता। अध्ययनं त्यक्त्वा चासौ स्वपितुस्समीपमा-गच्छत्। पितुस्समीपात् तस्मिन् श्रेष्ठगुणानां सञ्चारो जातः। नास्तिकतां त्यक्त्वा ईश्वरे विश्वासोऽभूत्। नियम-पूर्वकञ्च मन्दिरे मूर्तिपूजामकरोत्। परमेकदा वाराणस्यां विश्वनाथमन्दिरे प्रवेष्टुं निषिद्धः पुनर्नास्तिकोऽभवत्। पुनश्च मांसमदिरादिकं सेवितुमारेभे।

# देवगोष्ठी

एकविंशतितमे वर्षेऽस्य विवाहोऽभवत्। अस्य पत्नी शिवरानी शीलवती साध्वी आसीत्। सा प्रतिदिनं स्व पत्युः सेवायाम् अधिकतमं समयमयापयत्। मुंशीरामस्य गात्रं दुर्व्यसनेन रुग्णमतिदुर्बलञ्च जातमासीत् परं जीवनसङ्गिन्याः सेवया स पुनर्नीरोगतां लेभे।

एकदा जगद्गुरुः श्रीमद्दयानन्दो बरेली नगरमागच्छत्। तत्र च नास्तिकस्य मुंशीरामस्य दयानन्देन सह ईश्वरास्तित्व विषये वार्तालापो ऽभूत्। स्वामिमहोदयेन निराकृतसंदेहो ऽसौ तत्रैव नास्तिकतां तत्याज। शीघ्रमेव चार्यसमाजे प्रवेशमकरोत्। कृतसेवानिश्चयो ऽसौ मृत्युपर्यन्तिमार्यधर्मस्य सेवामकरोत्। आर्यसंस्कृतेः प्रसारार्थं कृतदृढनिश्चयो ऽसौ गुरुकुलस्थापनार्थं त्रिंशत्सहस्ररूप्यकधनमाहर्तुं गृहान्निर्गतः। तस्मिन् समये भारते दुर्भिक्षमासीत्। तथापि केवलं सप्तमासेष्वेव तन्निश्चितं धनराशिं गृहीत्वा गृहं प्रति न्यवर्तत। तस्मात् कालादेव स जनैर्महात्मेत्युपाधिना सुशोभितः। शीघ्रमेव च

# देवगोष्ठी

महात्मा मुंशीरामो हरिद्वारस्य समीपे भागीरथ्यास्तटे गुरुकुल काङ्गडीति नाम्ना गुरुकुलस्य स्थापनामकरोत्। सर्वप्रथमञ्च स्वपुत्राविन्द्र हरिश्चन्द्रौ तेन गुरुकुले प्रवेशितौ। अस्मिन् गुरुकुले छात्रेभ्यः साङ्गोपाङ्गवेदानां संस्कृतसाहित्यस्य भारतीयदर्शनानाञ्च शिक्षा प्रदीयते अपि च पाश्चात्यविषयाणामप्यनुशीलनं कार्यते। अत्रत्याः स्नातका बहिर्गत्वा आर्यसंस्कृतेः प्रचारं शिक्षणञ्च कुर्वन्ति। स्त्रीशिक्षायै च मुंशीराममहोदयेन जालन्धर-नगरे कन्यामहाविद्यालयः स्थापितः। तत्पश्चात् लोक-सेवार्थं गुरुकुलं त्यक्त्वा संन्यासाश्रमं प्रविष्टोऽसौ ततः प्रभृति स श्रद्धानन्देति नाम्ना प्रसिद्धोऽभवत्।

स्वामिनः श्रद्धानन्दस्य हिन्दीभाषायामतीवरुचिरासीत्। स एव सर्वप्रथमं हिन्दीभाषां मातृभाषेति नाम्ना समबोधयत्। स पञ्चनदप्रदेशे बहुकालं यावत् हिन्दीभाषायाः प्रचारमकरोत्। भागलपुरनगर्यां सो-ऽखिलभारतीय हिन्दीसाहित्यसम्मेलनस्य सभापतिपदम्

अशोभयत् ।

निर्भीकता श्रद्धानन्द महोदयस्य महान् गुण आसीत् । न केवलं वन्यप्राणिभ्यः अपितु विदेशीय शासकेभ्योऽपि तस्य भयं नासीत् । दिल्लीनगर्यमांग्लशासकानां भुशुण्डिकानां समक्षमपि स शोभयात्राया नेतृत्वमकरोत् । न कोऽपि तत्क्षणं विस्मर्तुमर्हति ।

राजनीति क्षेत्रेऽपि स्वामिमहोदयः सक्रियं भागमगृह्णात् । राष्ट्रपिता गान्धीमहात्मा अपि स्वज्येष्ठबन्धुमिवैनममन्यत । स्वतन्त्रतान्दोलने शासका एनं कारागार गृहेऽपातयन् । श्रद्धानन्दमहोदयोऽमृतसरकांग्रेसाधिवेशने स्वागताध्यक्षपदं सुशोभितवान् । न केवलमन्यक्षेत्रेष्वेवापितु सामाजिक क्षेत्रेऽपि श्रद्धानन्दो महतीं प्रसिद्धिं लेभे । समये समये स दुर्भिक्षपीडितानां सहाय्यमकरोत् । अस्य दलितोद्धारेण प्रभावित एव गान्धीमहोदयो हरिजनोद्धारान्दोलनं प्रारभत । अस्य शुद्धि प्रचारेण यवनास्तथा क्रुध्यन् यथा तेष्वेवैकः क्रुद्धयवनोऽस्य हत्यामकरोत्

# देवगोष्ठी

हुतात्मा श्रद्धानन्दः स्वजीवनेऽपि तां प्रसिद्धिं नालभत यां स दिवंगत्वा लेभे। राष्ट्रस्य सर्वेऽपि जनास्तस्मै श्रद्धाञ्जलिं समर्पयन्।

—०—

# श्रद्धानन्दस्य श्रद्धा

को नाम विस्मर्तुमर्हति कवीन्द्रस्य रवीन्द्रनाथस्य विश्रुतप्रभावस्य शब्दान् यत् --

"... स्वामिना श्रद्धानन्देनागाधा श्रद्धा एव दत्तास्ति भारतवर्षाय," "श्रद्धानन्द" इति नाम एव तस्य श्रद्धाभावनायाः परिचायकं वरीवर्ति स नित्यमेव श्रद्धावानासीत् श्रद्धायां आनन्दमनुभवति स्म" ।।

वयं वेदानां शिक्षाः, प्रातः स्मरणीयस्य विश्व वन्द्यस्य, पुण्यश्लोकस्य, स्वनामधन्यस्य, दयानन्दस्य उपदेशान् च प्रायशः पठामः शृणुमश्च । परं तेषाम-स्माकं जीवने कः प्रभावो जात इति न साम्प्रतं

# देवगोष्ठी

यावज्ज्ञातमस्माभिः। परं यस्य तपोमूर्तेः पुण्यपयोनिधि-पूतस्य स्वामिश्रद्धानन्दस्य विषये इमाः पङ्क्तयो लिख्यन्ते तस्य महापुरुषस्य जीवने एतासां शिक्षाणा-मुपदेशानाञ्च महान् प्रभाव आसीत्। तेन प्रभावेण च प्राप्तेनालोकेन अज्ञानान्धकारे निमग्ना जनताम्-आलोकिताञ्चकार।

स्वामिश्रद्धानन्दस्य महर्षेर्दयानन्दस्य सिद्धान्तेषु, श्रुतेः शिक्षासु च सुदृढा अभङ्गुरा श्रद्धा आसीत्। अनयैव श्रद्धया स सर्वेषां जनानां श्रद्धेयो बभूव। अद्य सोऽस्माकं मध्ये नास्ति सखेदं चास्माभिरनुभूयते तस्याभावः परं तस्य जीवनस्य मंगलमयानि कर्माणि इदानीमप्यस्मभ्यं प्रकाशस्तम्भवत् विराजन्ते। यां श्रद्धां सोऽधरयत् सा मूल्यासीत्तथापि सर्वथा सफला जाता। व्रतेन जीवनस्यानुशासनेन चैव मानवजीवने दीक्षा समायाति इयं दीक्षैवास्ति

# देवगोष्ठी

वस्तुत: वैदिकदीक्षा, दीक्षा च तद्वस्तु विद्यते यस्यां बुद्धिमत्तायाः, दूरदर्शितायाः, नेतृत्वशक्तेः हृदयस्य विशालतायाः, त्यागस्य भावनानां सर्वविधानां सदाचाराणाञ्च गुणानां समन्वयो वरीवर्ति। अस्यामेव मानवोत्थानस्य समस्तानि बीजानि निहितानि। अस्या दीक्षाया धारणेनैव मनुष्यः दक्षिणां सार्वदिग् दक्षताञ्च प्राप्तुं शक्नोति। श्रद्धायाश्च धारणमेवास्ति दक्षतायाः फलम्। इयं श्रद्धैवास्ति अत्युत्तमा सत्यप्राप्तेः सर्वोत्कृष्टं साधनञ्चेति। अनयैव सत्यस्य दर्शनं जायते।

चर्चितचरणयुगलस्य स्वामिश्रद्धानन्दस्य जीवनमस्यैव व्रतस्य दीक्षाया दक्षतायाः, श्रद्धायाश्च क्रमात् व्यतीतम्। इयमेव तस्य विदुषो विशेषता विद्यते। तस्य महापुरुषस्य विचारेण सहैव इयं श्रुतिः मस्तिष्के समायाति —

# देवगोष्ठी

"व्रतेन दीक्षामाप्नोति दीक्षयाऽप्नोति दक्षिणाम् ।
दक्षिणया श्रद्धामाप्नोति श्रद्धासत्यमाप्यते" ॥

श्रद्धाया: साक्षान्मूर्ते: श्रद्धानन्दस्य सर्वा: प्रवृत्तय: इममेव मन्त्रं परितोऽभ्रमन् । गुरुकुल शिक्षाप्रणाल्या: सद्गुरवाचार्यदयानन्दस्य शिष्येण अनेन महात्मना अस्मिन्नेव मन्त्रे शिक्षाया: निखिलान्युद्देश्यानि, अङ्गानि, साधनानि च विलोकितानि । तदाधारे एव च गुरुकुलं संस्थापितं तेन । आचार्यस्य सूत्राय साकाररूपदातु:, सरलमूर्ते:, श्रद्धानन्दस्य, श्रद्धा - अत्रापि सुफला बभूव । अद्य च सा उदात्तेन व्यक्तित्वेन ~~स्व~~ अस्तित्वेन च सार्द्धं स्वशिर उन्नतं विधाय गुरुकुलरूपे तिष्ठति । तस्य गुरुकुलस्य आदर्श: आश्चर्यमयो वर्तते तस्य च प्रत्येकस्मिन् कोणे त्यागमूर्ते: श्रद्धानन्दस्य जीवनत्यागस्य दर्शनं विद्यते ।

# देवगोष्ठी

राजनीतौ, समाजसुधारे, अस्पृश्योद्धारे, शुद्धेरान्दोलने राष्ट्रियशिक्षायाः प्रसारे यत्र कुत्रापि सरलचित्तेन श्रद्धानन्देन पादः निक्षिप्तस्तत्रैव श्रद्धाबलेन साफल्यं लब्धम् ।

कैश्चित् जनैः राष्ट्रियशिक्षणस्येतिहासः लिखितोऽस्ति यस्मिन् केवलमेकाङ्गितैव दृष्टिगोचरी भवति । वस्तुतस्तु राष्ट्रियशिक्षणस्येतिहासरूपं महर्षिणा दयानन्देन सूचितं श्रद्धानन्देन च प्रयोगे आनीतम् । अतः राष्ट्रियशिक्षणभूतस्य महान् संस्थापकः स्वामी श्रद्धानन्द एवास्ति, तस्येतिहासस्य च उद्गमबिन्दुः गुरुकुलकांगड़ी विश्वविद्यालयो वरीवर्तीति तथ्यं, सर्वे स्वीकरिष्यन्ति । स्व जीवनपर्यन्तमाचार्यदयानन्देन प्रदर्शितं व्रतं धारयित्वा अयं महात्मा यां श्रद्धां देवीमापूवान् तामेव सफलीकर्तुं प्रायतत । सा च सफलीभूता ।

# देवगोष्ठी

अन्ते च तया श्रद्धया पूर्वतोप्यधिकमाश्चर्यमयं कार्यं कृतम्। भगवतो दयानन्दस्य मुखारविन्दात् अन्तिम समये निर्गतान् "भगवन् तवेच्छा पूर्णा स्यात्" इति शब्दान् श्रुत्वा श्रद्धानन्देन हत्कस्य गोलिकां स्ववक्षसि सोढ्वा स्वश्रद्धास्मिन् रूपे व्यक्ता चक्रे यत्-

"अहं पुनर्जन्म गृहीत्वा स्वावशिष्टं कार्यं पूर्णं कुर्यामि" इति। इदानीमिह जगतीतले नास्ति महात्मा श्रद्धानन्दः परं तस्य श्रद्धा तं श्रद्धेयं कृतवती। प्रार्थये करुणावरुणालयं सच्चिदानन्दं परमेश्वरं यत् ईदृशी श्रद्धा अस्मभ्यं प्रेरणायाः स्रोतः स्यात्।



लेखकः - सुभाषचन्द्र।

# श्रद्धानन्दस्य अमृत-वचनानि

1 परमात्मनो दर्शनाय आत्मनः स्वच्छता पवित्रता -उच्चता चावश्यका विद्यन्ते।

2 चित्तस्य वृत्तयः दुष्टभावेभ्यो निरोधनीयाः येन पापमालिन्येन मनो मलिनं न स्यात्। अशुभाः कामनाः, दुष्टा विकल्पाश्च मनसि कदापि नोत्पद्येयुः। परमात्मनि ध्यानेन च कोऽपि पदार्थः ज्ञानदायको न भविष्यति।

3 प्रिया भ्रातरः! आगच्छत प्रातः सायं-काले च सन्ध्यां कुर्वन्तः प्रार्थनां कुर्मः, यत् तस्य सत्तया दयया च योग्या भवेम

# देवगोष्ठी

अस्माकं वाणी कर्म च सत्यमयं स्यात्। सदैव सत्यस्य चिन्तनं कुर्याम। वाचा सत्यमेव प्रभाषयेम. कर्मस्वेपि च सत्यमेव पालयेम।

४ पुत्रो शिलाखिण: आगच्छत। यमो-ऽमन: आज्ञां पालयन्त: शुभकर्मसु प्रवृत्ता भवत। सदैव सत्सङ्गतिं कुर्वन्त: ईश्वरप्रेरणया प्रेरिता भूत्वा अविद्याया नाशं विद्यायाश्च वृद्धिं कुरुत येन परमानन्दस्य प्राप्ति: स्यात्।

५ अन्त:करणस्य दृढत्वम्, उत्साह:, पुरुषार्थ:, सदाचारश्चेति एते एव सन्ति सर्वासां संपत्तीनां स्रोतांसि

कारणानि। मनुष्यः प्रतिष्ठां केवलं तपसा ज्ञानेन चैव प्राप्तुं शक्नोति।

5 अनेन शरीरेण आत्मना वा निष्क्रियेण न भाव्यम्। मालिन्ययुक्तेन अपवित्रेण न भाव्यम्। सत्यस्य सदाचारस्य च सदैव पालनं करणीयं, यतो हि अनयोरेवानन्दनिहितः अस्ति। प्रमोदस्य कारणमनयोरेवास्ति। अयमेव सत्यमार्गस्योपदेशो वर्तते। अस्मिन् मार्गे एव स्वर्गधाम वर्तते।

6 यो मनुष्यः सत्यवादी, सदाचारी अस्ति शरीरेण मनसा च कार्यसंलग्नो भवति सदैव। संसारस्य संपत्तिः मानश्च तस्यैवास्ति।

# देवगोष्ठी

८ बालकः युवा वृद्धो वा स्यात् सर्वैरेव परमात्मनः शरणे गन्तव्यं यतो हि ततो न कोऽपि विश्वासी पुरुषः नैराश्यं लब्ध्वा परावृत्तः ॥

९ परमात्मनः पवित्र दर्शनैः सकल विघ्नानां नाशं विधाय पुण्याक-मात्मा पवित्रत्वं प्राप्तुं शक्नोति ।

१० यावत् कालं अपवित्रता मनसो नापसरति पवित्रतायाश्च राज्यमन्तः करणे न भवति तावत्कालं दुःखानि न विनश्यन्ति ।

११ तत्रैव परम ब्रह्मणोऽन्वेषणं, यत्र परमात्मा सर्वेषां स्वामी तमेव स्वस्वामिनं मत्वा तस्य शरणे गमनं,

# देवगोष्ठी

अयमेवास्ति मनुष्यस्य धर्मः।

१२ न वयं अन्नमयकोषः, नैव मनो-
मयकोषः न चेन्द्रियाणि परं वयं
पूर्णम् चेतन सत्ता स्मः। आत्माभिर-
ताः करणे एव प्रभुरन्वेषणीयोऽस्ति।
अतः यावत्कालं वयं प्रकृतिं प्रति
दत्तं ध्यानं नापसारयेम तावत्कालं
परमात्मने ध्याने कथं निमग्ना भवि-
ष्यामः? किं वयं स्वमनुष्य जीवनं
व्यर्थमेव यापयेम। स्वपरमात्मानं
हृदयङ्गमं न कुर्याम?

१३ आचरणं विना विद्या
शुष्कापेक्षया दुःखस्यैव साधनं जायते।
अतो यदि सर्वशक्तिमन्तं प्रभुं स्वकीयं

परमरक्षकं परमात्मानं प्राप्तुमिच्छथ
तर्हि शक्तिं प्रकाशयन्तः स्वमनसि
धारयत।

१४ स्वार्थसिद्धये उक्ता प्रियवाणी संसारे
अशान्तिमुत्पादयति। परं सैव प्रियवाक्
यदा संसारस्योपकाराय प्रयुज्यते
तर्हि असंख्येभ्यो मनुष्येभ्यः
शान्तिं जनयति।

१५ वाक्तपसा बिना शारी-
रिक तपसः सिद्धिर्न भवितुमर्हति।
अतः स्ववाणीं पवित्रां कुरुत।
तां सत्येन पवित्वा हितजनिकां
विधत्त येन संसारे प्लवन्त्य,

# देवगोष्ठी

शान्तेश्च राज्यमागच्छेत् । वयं
च सर्वे प्रेम्णा अन्योन्यानि आत्मिक
बलं वर्धयन्तः मुक्ति प्राप्ति परमा-
नन्द प्राप्ते रधिकारिणः भवेम ॥

---

संकलन कर्ता अनुवादकश्च

# आत्मिक - स्वतन्त्रता

न्याय कारिण:, सर्वशक्तिमत:, सर्वनियन्तु: परमेश्वरस्य शरणं प्राप्नुत। यदि यूयं देहकारागारात् स्वातन्त्र्यमिच्छत, तर्हि तमेव स्तुवत। तस्यैव बलाय प्रार्थनां कुरुत स्वकर्माणि च शुद्धानि कुर्वन्त:। तस्याज्ञां पालयन्त: शनै: शनै: समीपं गच्छत। अर्थात् तमेव मतस्तु ध्यायत येन स युष्माकं निखिलानि दु:खानि बन्धनानि च विकर्त्य सर्वबन्धनेभ्य: युष्मान् स्वतन्त्रान् विधाय परमधाम्नोऽधिकारीन् कुर्यात्।

# श्रद्धानन्दः महापुरुषाणां सम्मतौ

I पुण्यश्लोकस्य श्रद्धानन्दस्य नामस्मरणेन सदैव शौर्यस्य, साहसस्य योगस्य च मूर्तिः चक्षुषोः पुरत आगच्छति। एतस्य विलोक्य स्वात्मनोऽपि साहसं वर्धते।

प्रधानमन्त्री जवाहरलालः

II स्वामिनः श्रद्धानन्दस्य स्मरणमात्रेणैव १९१९ ख्रीष्टसंवत्सरस्य दृश्यं नयनयोरग्रे आगत्य तिष्ठति। सर्वकारस्य सैनिकाः गोलिकाः-चालयितुं सज्जाः सन्ति। पूज्यः स्वामी वक्षःस्थलं पुरतः कृत्वा कथयति गम्भीरशब्देषु —

"चालयन्तु गोलिकाः" इति। को नाम जनिमान् प्रभावान्न मुग्धो भवति स्वामिनः वीरतां विलोक्य। अहं इच्छामि यत् तस्य वीरस्य

# देवगोष्ठी

सन्धालिन: स्मरणमल्मोतु वीरतामा :
बलिदानस्य च भावान् लक्षम् तेमे नू।

लौह पुरुष: वल्लभभाईपटेल:

III प्रात: स्मरणीयस्य श्रद्धानन्दस्य स्थानं सामाजिक-धार्मिक पुरस्कृतेषु अतिशयं विशिष्टं वर्तते। तेन वैदिकसंस्कृत्या: पुनरुत्थानं कर्तुं स्तुत्य: प्रयत्नो विहितोऽस्ति। तैर्हि देशस्य स्वतन्त्रतायै यत् किमपि कृतं तन्न वयं विस्मर्तुं शक्नुम:। अस्मै महात्मने मदीया श्रद्धाञ्जलयो: सन्तु:।

श्रीमान् कन्हैयालाल माणिकलाल मुंशी

IV वन्दनीयस्य स्वामिन: प्रतिभा बहुमुखी आसीत् देशाय च तस्य कार्य

# देवगोष्ठी

सर्वो तूष्णीमासीत् ।

श्री जगजीवनराम:

V स्वामी श्रद्धानन्द: श्रद्धया:, स्वच्छतायाः निर्भीकतायाश्च मूर्तिरासीत् । यैर्जनैः १९१९ ख्रीष्टाब्दे दिल्लीनगरे सर्वकारविरुद्धमान्दोलनं दृष्टमस्ति तेषां चित्तेषु स्वामिनः सा मूर्तिः अमिटरूपेण चित्रितास्ति या हि आंग्लानां गोलिकानामग्रे वक्षःस्थलं विवृत्य हृदयस्य निर्मलत्वं निर्भीकत्वञ्च द्योतयति । तेनैव विमलत्वेन "जामामस्जिद" इत्याख्यस्य मुस्लिम मन्दिरस्य मञ्चात् उपदेशः कारितः । हिन्दुमुस्लिमैक्यस्य च मनोरम्यं दृश्यं प्रदर्शितं, तथैव दृढतया सत्यनिष्ठया, स्वच्छतया, निर्भीकतया च खलानां हस्तैः शरीरपातः कारितः । भारतसंस्कृतिके इतिहासे स्वामिनः स्थानं पथप्रदर्शकरूपे प्रतिष्ठितमस्ति । यैः सत्

# देवगोष्ठी

तस्य साक्षाद्दर्शनस्य सौभाग्यं नोपलब्धं तेभ्यो हि तस्य जीवनवृत्तान्तस्य स्वाध्याय: एव जीवनोन्नायकोऽस्ति। तस्य स्वामिन: सकलं जीवनमेव ~~महत्~~: गुरुकुलस्य कार्यं करोति करिष्यति च ॥

राष्ट्रपति: राजेन्द्र प्रसाद:

श्रीमान् रैम्जे मैकडानल्ड महोदय: स्वगुरु-कुलयात्रां वर्णयन् श्रद्धानन्दस्य महद्व्यक्तित्वं प्रकटयति एवं शब्देषु —

एका महती भव्या मूर्ति:, यस्या दर्शनमात्रेणैव तां प्रति स्नेहेन, श्रद्धया, आदरभावेन च मस्तकं नतं भवति, अस्माकम् यतोऽस्मान् सत्कर्तुमागच्छति। कोऽप्याधुनिकश्चित्रकार: ईसामसीहस्य चित्रं चेत् चित्रितं कुर्यात् स यदीमां भव्यमूर्तिं स्वेप्रते: स्थापयेत्तर्हि चितं न भविष्यति। —— . .

— इंग्लैंड देशस्य प्रधानमन्त्री

# कर्मवीरः श्रद्धानन्दः



स्वामी श्रद्धानन्द एको महान् सुधारक आसीत् । स हि कर्मवीर आसीत् न तु वाक्शूरः । तस्य जीवितः जागृतश्च विश्वास आसीत् । तत्कृते च तेन बहूनि कष्टानि सोढानि । स महत्स्वपि कार्य संकटेषु स विचलितो नाऽभवत् । एको वीरवरः स आसीत् । वीराश्च सैनिकाः रोगशय्यायां मृत्युं नाभिलषन्ति परं रणाङ्गने एव पञ्चत्वं कामयन्ते ।

ईश्वरः धर्मवीरहुतात्मरूपे बलिदान रूपे वा तस्य मृत्युमैच्छत् । एतदेव भक्ति कारणं यत् यद्यपि स तस्मिन् समये मृत्युशय्यायामेवासीत्तथापि एकस्य दुष्टस्य घातकस्य हस्तेनैव तस्य देहान्तोऽभूत् । →

# देवगोष्ठी

गीतायाः शब्देषु —

"सुखिनः क्षत्रियाः पार्थ, लभन्ते युद्धमीदृशम्"
ते वीरवर्याः पुण्यात्माः सौभाग्यशालिनश्च वर्तन्ते
ये खलु एतादृशं बलिदानं प्राप्नुवन्ति।

महात्मनो यद्यपि स्वर्गवासी अभूत्
तथापि स साम्प्रतमपि जीवित एवास्ति।
स हि तत्कालादपि अधिकवासरेषु जीवितो
ऽस्ति यतः स विशालदेहेन सह अस्माकं मध्ये
विचरति स्म। स वीरवत् भारतभूमौ न्यवसत्
वीरवदेव च मृत्युमाप।

— महात्मा गान्धी —

स्वामिना श्रद्धानन्देन गान्धी महात्मा एव कृतासीत्
भारतवर्षस्य, "महात्मा" इति नाम एव तस्य
महात्मा भावनायाः परिचायकं वर्तते। स नित्यमेव
महात्मा आसीत्। तस्मात् एव आनन्दमनुभवति स्म।

— रवीन्द्र ...

# स्वामिश्रद्धानन्दस्य

## — साहित्य सेवा

स्वामी श्रद्धानन्दो न केवलमा-
दर्शी, धार्मिको, राजनीतौ नेता, प्रबलः
समाज-सुधारकः, प्रभावशाली वक्ता, गुरुकुल
शिक्षा प्रणाल्याश्च वर्तमान युगे जन्मदाताऽ-
वर्तत परमेकः सिद्धहस्तो महान लेखको
ऽप्यासीत्। तेन स्व वाण्या लेखन्या च
उभाभ्यामेव स्व जीवने देशस्य धर्मस्य
च सेवा कृता। तस्य बलिदानान्तरं
वयं तस्य वाचो लाभं प्राप्तुमसमर्थाः
स्मस्तथापि तस्योपदेशानां, विचाराणामाद-
र्शनाश्च परिचयदायिकाः साहित्यकृतयः
साम्प्रतं यावत् विद्यमाना वर्तन्ते। तस्मिन्

# देवगोष्ठी

दिवङ्गते सत्यपि एतानि पुस्तकानि अस्माकं मार्ग प्रदर्शनं कुर्वन्ति। एतानि च तस्य स्मृतेः कीर्तेश्च अमरस्मारकाणि वर्तन्ते। श्रीमता भर्तृहरिणा मनुष्यस्य साहित्यिक रचनानां विषये सत्यमेवाभिहितम् —

जयन्ति ते सुकृतिनो रससिद्धाः कवीश्वराः।
नास्ति येषां यशः काये जरामरणजं भयम्॥

महात्मना श्रद्धानन्देन हिन्दीभाषायाम्, उर्दूभाषायाम्, आङ्ग्लभाषायां च्वेति तिसृषु भाषासु स्वकीयानि पुस्तकानि लिखितानि। विषय दृष्ट्या भागत्रयं कर्तुं शक्यते तेषां पुस्तकानां —

1. धार्मिकानि सामाजिकानि च पुस्तकानि।
2. राजनैतिक ग्रन्थाः।
3. साहित्य ग्रन्थाश्चेति।

# देवगोष्ठी

संक्षेपतः पुस्तकानां परिचयो दीयते :—

१ हिन्दीभाषायां यथा—

i, पारसीमत और वैदिक धर्म।

ii, मातृभाषा का उद्धार।

iii, वेद और आर्यसमाज।

iv, मानव धर्मशास्त्र तथा शासनपद्धति।

v, आचार अनाचार और छूत छात।

vi, ईसाई पक्षपात और आर्यसमाज।

vii, आर्यों की नित्य कर्म पद्धति।

viii, पाँच महायज्ञ की विधि।

इत्यादीनि अन्यानि च बहूनि हिन्दीभाषायामेव लिखितानि पुस्तकानि विद्यन्ते।

2. आङ्गल भाषायां यथा :—

# देवगोष्ठी

i, Savier of the dying race.
ii, The future of Aryasamaj.
iii, The Arya Samaj And its

इत्यादयः आङ्गल भाषायां लिखिताः ग्रन्थाः सन्ति।

3 उर्दू भाषायां यथा —

i, दुःखीदिल की पुरदर्द दास्ताँ।
ii, मुहम्मदी साजिश का इन्कशाफ़।
iii, मेरी ज़िन्दगी के नशेबो फ़राज़।
iv, हिन्दू मुस्लिम इत्तहाद की कहानी।

एवमेवान्यान्यप्यनेकानि पुस्तकानि श्रद्धानन्देन लिखितानि सन्ति। यानि हि श्रद्धानन्दस्याभावे इदानीमपि अस्मभ्यं प्रेरणां ददाति।

# - गुरुकुल - गरिमा -

कलानां शीलानां ललित कुललीलां कलयतः ।
बलानां बालानां प्रबल बलमालां वलयतः ॥
कुलानां कूलानां विमल मुखमालिः फलयतः ।
अहो भूयो भूयो गुरुकुल विलासस्य महिमा ॥

यतः श्रद्धानन्दो निज सुखद श्रद्धां निहितवान् ।
स्वदेशे स्वोद्देश्ये निज सबल यत्नै र्दृढ दृढैः ॥
यतः शिक्षा दीक्षा प्रभवति च प्राचीन विधिना ।
तदेवेदं पुण्यं गुरुकुलमिदानीं विलसति ॥

यतो विद्यास्नाता विविध कुल कूलेषु कलिताः ।
निजाया विद्याया विदित निपुणायाः प्रभुतया ॥
यतो वा विद्वांसो जगति निज पाण्डित्य कलितो
विराजन्ते ततो गुरुकुलमिदं कस्य न मतम् ॥

# देवगोष्ठी

यतो लब्धा शिक्षा निखिल गुरु विज्ञान विषये।
यतो वायुर्वेदे विदधति पटुत्वं बहु जनाः॥
कृषेर्विद्या यत्र प्रबलतर यत्नैश्च महिता।
तदेवेदं विज्ञो गुरुकुल महोराजति तराम्॥

स्नातायाः गङ्गाया ललित सलिलायाः परिसरे।
गतायाः कुञ्जानां कलित सुमनानां परिसरे॥
बहूनां पुण्यानां परि पठित मन्त्रैश्च हृदये।
मुनीनां सिद्धानां गुरुवर गुरूणां गुरुकुलम्॥

# सम्पादकीयम्

अयि मान्याः सुरभारती प्रियाः

पाठकाः। संस्कृतोत्साहिनी परिषदः "देवगो-ष्ठीत्याख्यस्य प्रमुख पत्रस्य तृतीयाङ्कं 'श्रद्धानन्द विशेषांक' रूपे तत्र भवतां करार-विन्देषु अर्पयन्तः, अवर्णनीयमतिशयं मोदं वयमनुभवामः। वीरप्रसूरियं भारतभूः वरीवर्ति, संकटापन्नां, अज्ञानान्धकारे निमग्नाञ्च जनतां विलोक्यैव भवन्तीह भारतभुवि भूयांसो महापुरुषाः, समये समये संसारस्य रंगमञ्चे च एतादृशो विभूतयो ऽवतरन्ति याः स्वस्वालौकिकाभिनयेन लोकानानन्दयन्ति जनानां राजनैतिक-सामा-जिक-धार्मिक जीवनेषु च क्रान्तिमुत्पादयन्ति

# देवगोष्ठी

नवयुगस्य निर्मिते अभ्यर्चनीयो भगवान् श्रद्धानन्दोऽपि देशस्यास्य महती विभूतिरासीत् । वस्तुतस्तु तेन नवयुगस्य सूत्रपातः कृतः । तस्यैव भारतीय संस्कृतेः प्राणस्य, आर्यभाषायाः सुरगिरश्च समुन्नायकस्य, पुण्य पयोधि स्नातस्य, तपोमूर्तेः, आदर्श समाजसुधारकस्य, सार्व-रूपाङ्क चिन्तस्य आचार्य प्रवर महर्षेर्दयानन्दस्यानुगामिनः श्रद्धानन्दस्य, विश्ववन्द्यस्य, चर्चितचरण युगलस्य, भारत गौरवस्य, स्वामिनः श्रद्धानन्दस्य धवलां कीर्तिं चतुर्दिक्षु प्रसारयितुमयं "श्रद्धानन्द विशेषाङ्कः" संवत्सरस्य दिसम्बर मासस्य चतुस्त्रिंश-बलिदान महोत्सवे प्रकाश्यते । अस्मिन् ग्रन्थाङ्के पूर्वतो ह्यधिकं वैशिष्ट्यं वरीवर्ति महात्मनः श्रद्धानन्दस्य विषये विविध लेखा अत्र विद्यन्ते ॥

# देवगोष्ठी

अस्माभिः प्रतिज्ञातमासीत् यत् अस्मिन् वर्षे "देवगोष्ठ्याः" अङ्कत्रयमवश्यमेव प्रकाशयिष्यते । तदनुसारं स्वपाठकानां पुरः तृतीयाङ्कं हर्षातिरेकेण स्थापयामः । येन अस्माकं आत्मतोषः अस्ति च सर्वेषां लेखकानां च छात्राणां प्रयत्नानां मूल्याङ्कनस्य अभिवादनं कुर्मः । विद्यालय विभागाध्यापकाय श्री मते प्रकाश-चन्द्र महोदयाय, ब्रह्मचारिणः सहदेवनाथमिश्राय च सुरेशाय धन्यवादाः वितीर्यन्ते ।

आशा हे तृतीयाङ्कः भवतां सर्वेषां पुरस्तात् प्राप्य अधिकाधिकमान-न्दमनुभविष्यति हृदये ।

षड्विंशत्यां तारिकायां परिषदा अखिलभारतीय संस्कृत संभाषण प्रतियोगिता आयोजयिष्यते । इत्यलमतिविस्तरेण —

भवतामेव कृपाभिलाषी
सुभाष चन्द्रः - सम्पादकः ।

# -समाचार-समीक्षा-

गुरुकुल समाचाराः} १ गतमासस्य चतुर्दशतिथौ गुरुकुल कांगड़ी विश्वविद्यालयस्य भूतपूर्व-स्याचार्यवर्यस्य स्वामिनः सत्यानन्द महोदयस्य देहावसानमभूत्। शवस्य च गङ्गायां प्रवाहः कृतः।

२ गुरुकुलस्य भूतपूर्वकुलपतेः पंचनदीयार्यप्रतिनिधि सभायाश्च प्रधानवरस्य स्वामिनः आत्मानन्द सरस्वती महोदयस्य गत द्वादश तिथौ झज्जर-गुरुकुले देहावसानमजायत। दिल्लीनगरे च सहस्रशः जननामश्रुभिः सह दाहक्रिया

सम्पन्ना । गुरुकुलेऽपि शोकात् अवकाशो भूत् ।

## ३ आश्रम सभानां कार्यम्

संस्कृतोत्साहिनी परिषद: गतमासे एकमधिवेशनमभूत् । देवगोष्ठी पत्रिकायाश्च द्वितीयाङ्कः गतमासस्यान्ते त्रिंशतितिथौ प्रकाशितो जातः ।

## ४ प्रमोदावसरः

गुरुकुल कांगड़ी विश्वविद्यालयोपकुलपतयः सुप्रख्याता बहुधा पुरस्कृता उत्कृष्ट साहित्यकृतो मनीषिणः श्री पं. सत्यव्रत विद्यामार्तण्ड महोदया भारत शासनस्य प्रतिरक्षा मन्त्रालयेन "कर्नल" इति गौरवसूचकोपाधि प्रदानेन सत्कृता इति महत् प्रमोदस्थानम् । वयमपि तान् सहर्षं

वर्धापयामः । दिष्ट्या वर्धन्तां मान्यवर-
महाभागां लभन्तां च सर्वतोऽप्यधिकतरं
मानं गौरवञ्चेति वयं कामयामहेऽभ्यर्थया-
महे च मङ्गलमयं भगवन्तम् ।

# केन्द्रीय सर्वकार प्रेषितः

## शिक्षायोगः

चिरकालात् सर्वकारेण गुरुकुल कांगड़ी विश्व-
विद्यालयः स्थायीरूपेण विश्वविद्यालयो घोषितः स्या-
न्नवेति विषये विचारः क्रियते । एतत् कृते एव
समये समयेऽत्र गुरुकुले सर्वकार प्रेषिताः विद्वज्जनाः
समायान्ति । तस्मिन्नेव प्रसङ्गे गत विंशति तिथौ
एकः शिक्षायोगः सर्वकारेण गुरुकुले प्रेषितः
अत्र समायातः आसीत् । तस्मिन् त्रयो विद्वांसः
आसन् । एकः भारतस्य प्रासावकाशः प्रधानन्या-
याधीशः श्रीमान् पातञ्जलीः शास्त्री महोदयः
द्वितीयः श्रीमान् सुनीतिकुमार चटर्जी, तृतीयः

# देवगोष्ठी

श्री शुक्लमहोदयः। एतैः प्राक् गुरुकुलस्य भ्रमणं कृत्वा सर्वे विभागाः दृष्टाः। तदनन्तरं मध्याह्न-काले एतेषां पुरस्य पुरतः वेदमन्दिरे छात्राणां सांस्कृतिक कार्यक्रमाः अभूवन् यथाहि महा-विद्यालयस्य छात्राणां भाषणानि विद्यालयच्छा-त्राणां संस्कृत संवादाः महाविद्यालयस्य च प्राकृत भाषायां नाटकम्। एतान् कार्यक्रमान् विलोक्य सर्वे प्रसन्नाः जाताः। रात्रौ प्रथमा-योगः गुरुकुलात् प्रत्यवर्तत। आशास्यते यत् गुरुकुलं विश्वविद्यालयो भविष्यतीति।

## देशविदेश समाचाराः

भारतस्योत्तर प्रदेशस्य मन्त्रिमण्डले परिवर्तनं जातम्। अस्मिन् मासे च श्री मतः सम्पूर्णानन्द महोदयस्य स्थाने श्री मता चन्द्रभानु गुप्त महोदयेन नूतनं मन्त्रिमण्डलं निर्मितम्।

# देवगोष्ठी

2 गत पञ्चदश तिथौ नेपालदेशस्य महाराजेन श्रीमता महेन्द्रेण कोइराला मन्त्रिमण्डलमपसार्य संविधानञ्च समाप्य शासनं स्वहस्ते गृहीतम्।

3 इथोपिया देशे नाजिमलेवदिवसे क्रान्तिरभूत्। परं सम्राजः भक्तैः सैनिकैः सा विफलीकृता।

# सम्मतयः

भारतजनकल्याणं विदधातु
देवभाषाऽस्मदीया ॥
सुनीतिकुमार चाटुर्ज्या

# देवगोष्ठी

॥ संस्कृतं नाम दैवी वाग् अन्वाख्याता महर्षिभिः

भवतोऽध्ययने तस्याः कृतभूरिपरिश्रमाः

अभिनन्दनमर्हन्ति बाढं शानं न सहा [illegible]

इत्थं म० पतञ्जलिशास्त्री

विद्यार्थियों की लिखी यह पुस्तक देख कर मुझे प्रसन्नता हुई। मैं उन सब की शुभ कामना करता हूं।

परमेश्वरदीन शुक्ल
उपशिक्षा सलाहकार
भारत सरकार
20-12-60

# देवगोष्ठी

नितान्तमिव प्रसीदामि दृष्ट्वा
देवगोष्ठ्याः मासे मासे प्रकाशनम्
आशासे च यद्देवविद्ये प्रयत्ने
न कदाचिदपि विरामो भविष्यति ।

सत्यव्रतः
२६-१२-१९८०

प्रत्यहं प्रत्यहं वर्धेत
उत्साहः छात्रसंसदि ।
देवभाषा समुल्लासे
इत्यहं कामये हृदा ॥

— धर्मदेवो वेदवाचस्पतिः